# कवितावीथिः

प्रिय,
श्री जगदानन्द झा जी को
सस्नेह उपहृत
नोदनाथ मिश्र
1.3.2016

डॉ० नोदनाथ मिश्रः

अप्रैल, 2009



**प्रकाशक :**
यशस्वी प्रकाशन
लालगंज, पो0 सरिसव पाही
मधुबनी (बिहार) - 847424

**मूल्य :** 110/-

**मुद्रक :**
जगमोहन प्रिन्टर्स
29, सम्मेलन मार्ग
इलाहाबाद-211003 (उ0प्र0)

# अनुक्रमः

# नान्दी

संस्कृत-कविता की सहज-सामयिक धारा अब सहृदय पाठकों एवं रसज्ञ श्रोताओं को भरपूर आकृष्ट करने लगी है। संभवतः इसका कारण है साम्प्रतिक संस्कृत कविता का सरल-मधुर पदबन्ध एवं काव्य विषयों का चिर-परिचित होना। पुराने कवियों में, यहाँ तक कि ब्रिटिश शासनकाल के कवियों में भी 'शब्द-क्रीड़ा' के प्रति एक दुर्वार आसक्ति थी। कवियों को आत्मतोष ही नहीं होता था विना काव्य में सौशब्द्य का इन्द्रजाल रचे। फलतः उनका सारा श्रम यमक, श्लेष एवं अनुप्रास की योजना में ही क्षीण हो जाता था और कविता समाज की संवेदना से, भावनाओं के अर्थ से सर्वथा अछूती रह जाती थी।

डॉ० नोदनाथ मिश्र जी की प्रकाशोन्मुख काव्यसंकलना कविता वीथिः के सन्दर्भ में मेरी उपर्युक्त काव्यसमीक्षा सर्वथा खरी उतरती है। डॉ० मिश्र सरल, उदार, प्रीतिस्निग्ध व्यक्तित्व के धनी हैं। वह सर्वाभ्युदयाशंसी सत्पुरुष हैं। ऐसा समञ्जस व्यक्तित्व जिसका कारण होगा उस कारण का कार्यभूत, उसकी कविता भी वैसी ही होगी। और सचमुच, कवितावीथिः में संकलित कवितायें, आरोपित काव्यश्रम से मुक्त हैं।

डॉ० मिश्र जी का अध्यापकीय जीवन अत्यन्त प्रशस्त रहा है। केन्द्रीय विद्यालयों के अध्यापन, प्राचार्यपदीय प्रशासन से आगे बढ़ते हुए, उन्होंने मानव संसाधन मंत्रालय में संस्कृत-अनुभाग के उप सचिव पद को अलंकृत किया तथा देववाणी की अभूतपूर्व सेवा की। प्रशासनिक पद पर रहते हुए भी अपनी सहृदयता को सँजोये रखना कठिन होता है। परन्तु डॉ० मिश्र ने अपनी कवित्व-प्रतिभा को अप्रतिहत-अप्रभावित बनाये रखा है।

**कविताविथिः** में वार्णिक कविता के साथ ही साथ सरल-मधुर मात्रिकगीत भी हैं, गजलें भी हैं। भक्तिभावना में भींगी कविता (अपनय जडत्वं घनतरम्) में यदि समर्पण की सान्द्रता है तो राष्ट्रियगीतों में (भवेयं राष्ट्रसेवायां वृतः, त्रिरङ्गः प्रोन्नतो वेपमानः, मदीये भारते देशे) राष्ट्रप्रेम में डूबे हृदय का समुच्छ्वास है । कवि नये भारत की चर्चा करता है—

**त्रिरङ्गः प्रोन्नतो राष्ट्रे ध्वजोऽयं भाषते नित्यम् ।**
**अजस्त्रैः शोणितैर्लब्धा जनैः स्वाधीनता देशे ॥**
**इयं माता, सुता ये केऽपि हिन्दु-ख्रीस्त सिक्खाद्याः ।**
**जिना बौद्धाः सखायो मुस्लिमा अपि बान्धवा देशे ॥**
**विलौक्यैषां तु सहभावं प्रमोदः प्राप्यते देवैः ।**
**प्रसन्नास्ते समीहन्ते जनुः स्याद् भारते देशे ॥**

दुहितुः व्यथा, रौति मे स्वतन्त्रता, देहि मे (शिक्षकस्य मनोऽभिलाषः) रिक्ततां मे हृदः कः सखे वारयेत् तथा अहं ब्रह्माऽस्मि सरीखी कुछ कवितायें तो हृदय को मर्माहत कर देती हैं। वस्तुतः इन कविताओं में कवि की सरस अन्तर्दृष्टि तथा उसकी सूक्ष्मान्वेषिणी प्रतिभा विशेष रूप से अभिव्यक्त हुई है।

यद्यपि तीस काव्याभिव्यक्तियों के संकलनभूत इस काव्यसंग्रह में कहीं-कहीं छान्दसी शिथिलता 'कवि-प्रतिभा' को दोलायमान भी करती है, परन्तु कलेवर की न्यूनता होने के कारण, उसे अधिक महत्त्व नहीं दिया जा सकता। उस कलेवर में तिरोहित संवेदना ही वरेण्य है,ग्राह्य है।

मैं **कविताविथिः** के प्रतिष्ठित कवि डॉ० नोदनाथ मिश्र के सारस्वत-श्रम का हार्दिक अभिनन्दन करता हूँ। निश्चय ही यह काव्य माँ वागधिष्ठात्री का भण्डार समृद्ध बनायेगा।

22 अप्रैल, 2009 ई०।
राजश्री, शिमला (हि०प्र०)

सस्नेह
अभिराज राजेन्द्र मिश्र
**(प्रो० अभिराज राजेन्द्र मिश्र)**
राष्ट्रपति-सम्मानित
पूर्वकुलपति

# अपनय जडत्वं घनतरम्

नमामि त्वाम् मातः विमलमतिदे भारति शिवे,
त्रिवेदज्ञे विद्ये शुभकरि नयज्ञे श्रुतिधरे ।
जगद्वन्द्ये मेधे, प्रतनु प्रखरं ज्ञानकिरणम्,
द्रुतैर्वीणानादैरपनय जडत्वं घनतरम् ।।

अशक्ताः पुत्रास्ते जननि, खलु भोगेन्द्रियवशाः,
हताशास्तप्यन्ते कलुषहृदयाः मोहपतिताः।
विलुप्ता सर्वेषां सहजसुखशान्तिः त्रिगुणिके,
द्रुतैः क्षीरस्त्रावैरपगमय चाञ्चल्यमखिलम् ।।

बहुज्ञे! लोकेऽस्मिन् नवगतिलयाकांक्षणकुले,
सुरम्यां वासन्तीं ललितमतिलेखां प्रकटय।
अदैन्यं भद्रं वा वितर नितरां क्षीरधवले,
स्मितैर्मन्दैः शुभ्रे, विहर रसिकानां समुदये ।।

सदा ध्यायं-ध्यायं चरणकमलं ते सुरसिकाः,
कलाकाव्यागारं सकलहितकारि व्यरचयन् ।
कृपास्नेहं दत्त्वा सुमुखि! प्रणतेभ्यः शरणदे!
द्रुतैर्मुक्तामालैः विकिर ममतास्फाटिकमणीन् ।।

# भवेयं राष्ट्रसेवायां वृतः

न जाने ते कथं ध्यानं भवेदावाहनं मातः,
कथं ते सेवनं कुर्वे कथं ते भक्तिमम्बाहम् ।
कथं पूजा विधेया ते विना भक्तिं विना शक्तिम्,
विनीतोऽहं जननि याचे त्वदीयं सौख्यदं शरणम्।।

दयाशीले जननि, अम्ब त्वमसि हंसासना ख्याता,
त्वमसि कुन्दप्रिया मातः त्वमसि वीणाकरा शुभ्रा ।
त्वमसि वन्द्या पराशक्तिः त्वमसि पद्मासना विद्या,
अतोऽहं प्रार्थये दीनं, कृपादृष्ट्यावलोकय माम् ।।

कृपामुपलभ्य ते मातः, भवेयं कर्मकुशलोऽहम् ,
सदाचारी सुकाव्यानां कवयिता, प्रीतिदं मित्रम् ।
दयामासाद्य ते विद्ये प्रवृत्तो नीतिमार्गेऽहम् ,
भवेयं राष्ट्रसेवायां वृतः सौहार्दसद्भावैः ।।

# वन्दनीयं सदा भा-रतम् भारतम्
## ( काव्यालिशैल्यां गीतिः )

भूतले देवतानां प्रियं भारतम्,
तापसानां तपः साधनं सिद्धये।
मातृपीठं पवित्रं पदं पैतृकम्,
वन्दनीयं सदा भा-रतम् भारतम् ।।

प्रेमबीजं परं, वीरवेशं वरम्,
स्नेहशान्तिप्रदं धीरधुर्यं ध्रुवम् ।
यस्य विश्वंभरा भूतभव्येषु भूः,
वन्दनीयं सदा भा-रतम् भारतम् ।।

लोकतन्त्राङ्गणे भास्वरम् भास्करम् ,
ज्योतिषां निर्झरं स्रावयद्वै शिवम् ।
यस्य भाले नगेशस्सुवर्णायते,
वन्दनीयं हि तं भूपतिम् भारतम् ।।

मौनमालम्बते नैव दृष्ट्वाऽनयम् ,
गीयते पौरुषं यस्य रात्रिन्दिवम् ।
यत्र भद्रं समेषां मुहुरिष्यते,
वन्दनीयं हि तद् भारतम् भारतम् ।।

यत्र चित्ते च काये मनस्येकता,
शान्त्यहिंसाप्रियत्वं च सत्संगतिः।
त्यागहेतोः सतां सम्मतं जीवनम् ,
वन्दनीयं हि तद् भारतम् भारतम् ।।

विद्यया यत्र मानो जनैर्लभ्यते,
अश्नुते विद्ययैवाऽमृतं साधकः।
स्वर्ग्यमाराध्यमेकं प्रियं कामदम् ,
वन्दनीयं हि तन्नन्दनं भारतम् ।।

यत्र कर्माणि भावाश्च आनन्दनम् ,
सन्ति स्वातन्त्र्यरक्षाकृते वासिनाम् ।
रागमेकं स्वदेशस्य गातुं पराः,
वन्दनीयं जनानां प्रियं भारतम् ।।

मानसं भीतिशून्यं जनानां मुदा,
यत्र लभ्यो हि बोधः समेषां कृते ।
नैव खण्डेषु भोग्या धरा धीयते,
वन्दनीयं विशालं भुवं भारतम् ।।

# त्रिरङ्गः प्रोन्नतो वेपमानः

उत्तुङ्गः प्रहरी शशांकवदनादाहर्ति शैत्यं सुधा ।
नित्यं भास्करमण्डलांशुनिकरान् संहृत्य रत्नायते ।।
योऽयं भाति हिमालयो नगपतिःसाक्षाद्धृतेराकृतिः ।
मन्ये धीरजनिर्धरा जगति या, तद् भारतम् भारतम्।।

मध्ये विन्ध्यगिरेरनल्पदृढ़ता यस्यौजसा भासते।
आनाकं नगराजयोऽपि सततं सोत्साहयानोत्सुकाः।।
वीचीर्यत्र महोदधेरभिलषा राकापतेराननम् ।
गंगा यस्य गले कृता स्त्रगिव नस्तद् भारतम् भारतम्।।

यत्रास्ते सहजैकता निवसतामन्योन्यसंपृक्तता ।
आचारः परमो विधिः सुजनता कुट्यां, विशाले गृहे।।
सौहार्दं तनुते सुखाय जगतोऽहिंस्रो भवेन्मानवः।
मैत्रीभावभृतं सहिष्णुहृदयं तद् भारतम् भारतम् ।।

भाषा-वेश-निवेश भिन्नरुचयोऽप्येकं जना राष्ट्रियाः।
सर्वेषां ननु दुःखनाशनपराः सर्वे हिताकांक्षिणः ।।
वित्तं नैव कदापि कारणमभूत् मिथ्यामदस्यात्मनः।
प्रेम्णः पौरुष-भक्ति-स्नेहसरितां तद् भारतम् भारतम्।।

वात्याश्चैव परःशताः मनुजतादीपं न चाऽवापयन् ।
पुष्पेभ्योऽपि सुकोमलानि हृदयानीत्थं तितिक्षामतिः ।।
आराध्या निजमातृभूश्च जननी स्वर्गाद्वरेण्या सदा।
ग्रामे प्रांगणचत्वरे च नगरे तद् भारतम् भारतम् ।।

मा भूत् कोऽपि कदाचिदुग्रतरधीः हिंसादिकार्ये रतः।
सर्वे सन्तु निरामयाश्च सुखिनो भद्राणि पश्यन्तु ते।।
गीताज्ञान-कुरान-वेदगुरुभिर्गीतं सुगीतं च यत् ।
सौहार्दं सहभावमेव तनुते तद् भारतम् भारतम् ।।

निखिलऋतुसुरम्या पुष्पिता नन्दिता भूः ,
विविधनदनदीनां नीरधाराभिषिक्ता ।
विबुधगणसुगेया भारती क्षेमयोगा,
लसति नः सुमाता धूयमानैस्त्रिरङ्गैः ।।

नवल-नवलबन्धैः योजनाभिश्च पूर्णा,
सुखयति भुवि लोकान् कर्षकान् हर्षदात्री।
जनहितकृतसर्वा या गृहोद्योगलग्ना,
दिशि-दिशि रुचिरा सा भारती भास्तनोतु ।।

अवतु नमतु लोकः मातरं भारतं स्वम् ,
त्यजतु त्यजतु रोषं वाङ्मनोकायजन्यम् ।
भवतु भवतु सर्वः कर्मनिष्ठो विवेकी,
रसति ननु त्रिरङ्गः प्रोन्नतो वेपमानः ।।

# मातृभूमिर्मदीया
## ( गजलगीतिः )

मातृभूमिर्मदीयोत्तमा,
भारती भाति भूत्यै धरा।
तत्सुतोऽहं सदा स्नेहिलः,
स्नेहदात्री जनानामियम् ।।

यत्र नीतम् अतीतं मया,
भव्यकाले सुखं प्राप्स्यते ।
जन्मजन्मान्तरे शर्मदा,
शान्तिभूः भारतीया सदा।।

सिन्धुरापो हि रत्नाकरः,
पर्वताः सन्ति यस्याः सदा।
अन्नदात्री समेषां च या,
पालिका सा सदा भूरियम् ।।

देवताभ्यो मता यज्ञभूः,
मानवानां च स्वस्त्यै वृता।
कामधेनुर्जनानां हि सा,
भद्रभूमिः सदा भूरियम् ।।

# आख्यानवितानं निर्मामः
## ( काव्यालिगीतिः )

इयमेव सतां महतां भूमिः,
वयमेव हि शिशवः आर्याणाम् ।
वयमेव हि राष्ट्रविनेतारः,
निजराष्ट्रं नित्यं प्रणमामः ।।

वयमेव हि सूर्याः चन्द्राश्च,
अरिमर्दनशीला मनुपुत्राः ।
इतिहास उदेष्यति तस्यैव,
आख्यानवितानं निर्मामः ।।

वयमेव हि वीरा धीराश्च,
प्रह्लाद-भरत-अभिमन्यु-ध्रुवाः।
निजदेशप्रातिष्ठावृध्यर्थम् ,
उत्सृष्टशरीरा विचरामः ।।

वयमेव अहिंसाशान्तिरताः,
"वसुधैव कुटुम्बम् अस्माकम् "
अमुमेव हि संस्कृतिसन्देशम् ,
आदाय स्वतन्त्रं विहरामः।।

वयमेव हि रघुकुलसत्यव्रताः,
निजजननी-जनभू-मानधनाः।
स्वर्गादपि ललितम् आराध्यम् ,
ननु प्राणपणैरपि रक्षामः ।।

# मदीये भारते देशे

अहो, रराजते तन्त्रं जनानां, भारते देशे ।
गणानां संकुले ऐक्यं, मदीये भारते देशे ।।

गणाकाशे तमोध्वंसिप्रभाभिः पूरितं तन्त्रम् ।
प्रपातं ज्योतिषां प्रथयन् चकास्ते भारते देशे ।।

अहिंसाराधको गांधी तपोभिः प्रापयत् सौख्यम् ।
स्वतंत्रं लोकतंत्रं वै, मदीये भारते देशे ।।

सहास्तित्वाय राष्ट्राणां जगत्यां शान्तिसन्देशैः।
पुरोधा नेहरूः प्राभूत् मदीये भारते देशे ।।

मनस्येकं वचस्येकं क्रियास्वेकं महात्मनः।
विराजन्ते हुतप्राणा नुदन्तः भारते देशे ।।

पुरे ग्रामे, गृहे, कुट्यां, नगर्यां स्नेह-सद्भावाः।
कुटुम्बम् मन्यते विश्वं, मदीये भारते देशे ।।

पदं मातुः, पितुर्धन्यं, गुरोर्ज्ञानप्रदातुश्च ।
त्रयोऽप्येते महीयन्ते, मदीये भारते देशे ।।

शुभाः गाथास्तु वीराणां, स्मरन्तो राष्ट्रसीमासु ।
अहिंस्राः शूरयन्ते ते मदीये भारते देशे ।।

त्रिरङ्गः प्रोन्नतो राष्ट्रे ध्वजोऽयं भाषते नित्यम् ।
अजस्रैः शोणितैः लब्धा जनैः स्वाधीनता देशे।।

नदीनां नीरधाराभिः, धरेयं सिञ्चिता रम्या ।
ऋतूनां लालनैर्दिव्या मता क्रीडास्थली देशे ।।

इयम् माता, सुता ये सन्ति हिंदु-ख्रीष्ट-सिक्खाद्याः।
जिना बौद्धाः सखायो मुस्लिमा अपि बान्धवा देशे।।

विलोक्यैषां तु सहभावं प्रमोदः प्राप्यते देवैः ।
प्रसन्नास्ते समीहन्ते, 'जनुःस्याद् भारते देशे' ।।

न कोऽपीर्ष्यानले, द्रोहे प्रदग्धः स्यान्न हिंसालुः।
क्वचिन्नैवास्तु नारीणां व्यथा भ्रूणाहतैर्देशे ।।

तिरस्कारो न कन्यानामुपेक्षाऽपेक्षिता लोके ।
भवेद्भद्रंकरं तन्त्रं मदीये भारते देशे ।।

# सौराष्ट्रे सुन्दरं सर्वम्

सौराष्ट्रे सुन्दरं सर्वम् , सुन्दरं पोरबन्दरम् ।
तत्रापि सुन्दरं नूनम् , 'आर्यकन्यासुमन्दिरम्' ।।

शोभनं प्रांगणञ्चास्य, रम्यं 'भारतमन्दिरम्' ।
'तारकामन्दिरं' चापि अत्र सम्यक् च सुन्दरम् ।।

वेदामृतं यत्र कन्याः गिरन्ति सस्वरं शुभम् ।
आत्मसंस्कृतिज्ञानाय, अत्राखिलं हि सुन्दरम् ।।

प्रेम्णा स्नेहेन चालापः काव्यालापस्तथैव च ।
ज्ञानविज्ञानचर्चाभिः कृतं मन्दिरमुत्तमम् ।।

ईषत्स्पृष्टं लवणेन मिश्रितं शर्करेण च ।
भोजनं दुर्लभं तक्रं चात्र सर्वं हि सुन्दरम् ।।

"सोमनाथं" महद्दिव्यं तद्दृष्टं देवमन्दिरम् ।
सागरांके च खेलन्त्यो वारिधारा मुहुर्मुहुः ।।

शोभनं निलयं तत्र सवितुः प्रेक्षितं मया ।
सायंकाले च आर्तिक्यम् अत्र सर्वं हि सुन्दरम्।।

गुर्जरे शारदाग्रामे अपरं ज्ञानमन्दिरम् ।
सहसा विलोक्य तच्छोभाम् आनन्दोऽनुभूयते ।।

कृषिविज्ञानक्षेत्रेषु विद्यादानपरायणः ।
बालकानां च संस्कर्त्ता, अत्र सर्वं हि सुन्दरम् ।।

पोरबन्दरे प्राप्ते ईक्षितं कीर्तिमन्दिरम् ।
कस्तूरबाभवनं चैव सुदाम्नः मन्दिरं वरम् ।।

चामुंडामंदिरं तत्र कपोतानां च प्रांगणे ।
उड्डीय पुनरागमनम् अत्र सर्वं हि सुन्दरम् ।।

सभ्यानां कृतविद्यानां धनिनां यत्र संस्थितिः ।
व्यवसायरतानां च प्रसिद्धं पोरबन्दरम् ।।

श्रमतः नीरनयनार्थं मार्गेषु ललनाश्चलाः।
सघटाः पौरुषरूपास्ता, अत्र सर्वं हि सुन्दरम् ।।

---

# ररक्षात्मराष्ट्रं स राजीवगान्धी

महाराष्ट्रमुम्बानगर्यां प्रसूतः ,
सुविज्ञः सुधीः जन्मना तीव्रबुद्धिः ।
श्रिया नेहरोः ख्यातवंशस्य भास्वान् ,
फिरोजेन्दिरापुत्र राजीवगान्धी ।।

गृहीत्वा सुशिक्षां विदेशे, मनोज्ञा,
कृतेतालवी सोनिया भारतीया ।
सदोदीयमानो विमानीयक्षेत्रे,
वभावम्बरे सोमराजीव गान्धी ।।

ययौ राजनीतिं न मातुः सकाशे,
ततानैव वैमानिकं कौशलं स्वम् ।
अकस्मात् विधातुः कुदृष्ट्या, सुभ्रातुः,
विषादात् श्रितस्तां स राजीवगान्धी ।।

स्वमातुः सहाये रतोऽहर्निशं सः ,
प्रतस्थे महादुर्गमां राजनीतिम् ।
बभूवाद्भुतोऽयं युवाशक्तिनेता,
पदं सांसदं प्राप राजीवगान्धी ।।

द्रुतैर्दिश्यमानो जनन्याः प्रियः सः ,
ततानात्मने साहसं राजनीत्यै ।
हता हन्त माता वराकैः कृतध्नैः,
भृशं दुःखितोऽभूत् स राजीवगान्धी ।।

निमग्नो विषादाब्धिमध्ये तितीर्षुः ,
महन्नेतृवर्गैश्चितोऽसौ प्रधानः ।
युवा नैव प्राप्नोत् पदं भारतेऽस्मिन् ,
यथाऽल्पे वयसि स राजीवगान्धी ।।

मुदा लोकतन्त्रं वितन्वन् युवाऽसौ,
यशस्वी जनानां प्रियोऽभूत् प्रधानः ।
नवीनः सुस्वच्छः सदाचारमग्नः,
ररक्षात्मराष्ट्रं स राजीवगान्धी ।।

विशिष्टैः सुकृत्यैश्च वित्तादिकानाम् ,
नवीनैः सुयंत्रैः विज्ञानवृद्धिम् ।
सुशिक्षां नवीनां नवोदीयमानाम् ,
चकारात्मराष्ट्रे स राजीवगान्धी ।।

विदेशेषु बंधुत्वभावं प्रपन्नः,
मुदा प्रैषयच्छान्तिसैन्यं सुलंकाम् ।
स्वराष्ट्रेऽपि सौख्यं समृद्धिं विनेतुम् ,
हतो हा कया रत्नराजीवगान्धी ।।

---

# शौर्यं समैः स्मर्यते

यस्याम्बा प्रभया युता च जनकः श्रीमैथिलीशो बसुः,
याभ्यां लालितपोषितः समभवद्राष्ट्रस्य भक्तो महान् ।
दुर्भिक्षे च विलोक्य पीडितजनान् बाल्ये गृहान्निर्गतः,
सेवाधर्मपरायणो विजयते नेता सुभाषः सुधीः ।।

निर्मायाग्रदलं स्वतंत्रमकरोत् स्वातन्त्र्यघोषं मुहू- ,
राष्ट्रैकव्रतधारणाय महती सेना नराणां कृता।
नारीणामपि सैन्यमद्भुतमभूद् लक्ष्मी हि यस्याग्रगा,
राज्यं प्राप्तुमियेष योद्धुमरिभिः सोऽसौ सुभाषः सुधीः।।

"त्वं मह्यं रुधिरं प्रदेहि सुलभा मुक्तिस्तवार्थे कृता",
स्वातन्त्र्याय रणे भवेद्यदि मृतिस्तत्रापि वीरा गतिः।
स्वापे चेन्मरणम् अहो जनिभुवः सञ्चुम्ब्य पादौ श्रये,
प्राणांस्त्यक्तुमसौ सदोद्यतमना श्रीमद्सुभाषः सुधीः ।।

आत्मीयैश्च प्रदत्तकोषसुलभं द्रव्यं व्ययार्थं कृतम् ,
वार्ताः श्रावयितुं स्वराष्ट्रव्रतिनाम् आकाशवाणी कृता ।
पत्रं नूतनवृत्तप्रेषणपरम् "आजादहिन्दा"भिधम् ,
इत्यासीत् सकलं सुनेतृघटितं प्राप्त्यै स्वराज्यस्य वै ।।

राष्ट्रं कर्त्तुमसौ स्वतंत्रमजयत् वैदेशिकान् शासकान् ,
बर्मा-बर्लिन-टोकियोप्रभृतयो जाताः सहायाः समे।
रंगूने वसतिं चकार महतो लक्ष्यस्य पूर्त्यै मुदा,
शक्तिं प्राप्य हिमालयाद् दृढ़तरो भूतः सुभाषः सुधीः।।

कारास्थान् ननु प्रैरयत् हि निखिलान् स्वातन्त्र्यमाप्तुं स्वयम्,
तत्सिद्ध्यै वरमस्ति घासमशनं त्याज्यं घृतस्याशनम् ।
यावज्जीवनमादधार हृदये राष्ट्रस्य मुक्त्यै व्रतम् ,
दोधूयेत ध्वजा सदा प्रियतमे देशे त्रिभीरञ्जिता ।।

शाठ्येनापि शठेषु वैरिषु क्षमः एको हि लक्षेष्वसौ
रम्यां भारतमाधुरीं नदनदीघोषं च पक्षीरवान् ।
स्मारं त्यागतपोधनान् ऋषिमुनीनामन्त्रयत् सैन्यपः,
"एकीभूय समाव्रजन्तु निखिला देशस्य मुक्त्यै जनाः" ।।

जाता युद्धविभीषिका भुवि यदा "दिल्लीं चलन्तू"क्तवान्,
मृत्योर्भीतिमपास्य वीरवसुधामुद्धर्तुमत्युत्सुकः ।
बर्मातो निजमातृभूमिमविशत् आसामराज्यं ययौ,
इम्फालम् अधिकृत्य भारतजनान् प्रोत्साहितानाह्वयत् ।।

सेवाधर्मपरायणो हि प्रहरी जयहिन्दभाषी सुधीः,
दैवादात्मन्यागतां तु विपदं दृष्ट्वा च लेभे शुचम् ।
दूरं यातुमजानता स्वयमहो, नेता क्व जाने गतः ,
हा हा तस्य सुवीरधीरजनुषः शौर्यं समैः स्मर्यते ।।

---

# सादृश्येऽनुपमो कृती कविगुरुः

येनाकारि सरस्वती सुतवती भक्त्यात्मनो जन्मना,
यस्याभूच्छिवपार्वतीप्रतिकृतिर्वागर्थसन्दीपनी।
वाल्मीकेर्कवितावलीस्वनुरतः काव्याङ्गणे मोदयन्,
लोकान् यो विदधाति काव्यरसिकान् सोऽसौ कवीन्द्रः श्रुतः।।

लोके भिन्नरुचौ कथा रसमयी प्रेमाश्रुपूर्णा प्रिया,
नीता येन हि मेघदूतललिता भूयोऽपि संस्मर्यते।
काले नीतसुनीतयो बुधजना बध्नन्ति सर्वेप्सितम्,
मोघा स्यादभियाचनाधिकगुणे तत्कालिदासामृतम्।।

सादृश्येऽनुपमः कृती कविगुरुर्काव्येऽखिले नाटके,
गांगं वारि च यामुनं प्रतिवहन्नास्ते तदीये कृतौ।
शृंगारे सरसान् मधुस्त्रवगुणान् ध्यायंश्च कारुण्यकान्,
हृदि या याति सुखानुभूतिविततिः तत् कालिदासामृतम्।।

सर्वं यत्र प्रणोदितं करुणया काव्येषु, शाकुन्तले,
मेघे, कार्त्तिकसंभवे रघुकुले रामायणीयाधृतिः।
लोके मानवतैकध्येयकथने सृष्टीरसानां कृता,
सर्वेषां हृदि नूपुरानुरणनं, तत् कालिदासामृतम्।।

---

# दलयति च दर्पं विमनसाम्
## ( ग्रीष्मर्तुचित्रणम् )

ऋतूनां लालित्यं सरसकमनीयं परिदधत्,
न जाने कुत्रास्ते मदननृपतिर्हा सुरभितः।
सुसामन्ते याते भुवनतलमालोक्य रहितम्,
इहायातो ग्रीष्मः सकलजनसन्तापनपरः।।

वपुष्मानाकाशे भवति ननु दीप्ते दिनकरे,
निदाघो ज्वालाभिः ज्वलदनलमालाभिरुषितः।
परिव्याप्तो लोके द्रुततरपदाघातदलनैः,
कदायातो ग्रीष्मः सकलजनसन्तापनपरः ।।

दिवानाथे दीप्ते भवति रिपुनाशोद्यतबले,
तमोराशेर्मानं सहजमभिमानं विलयते ।
ललज्जिह्वो वायुरनुपलविकंपितमुखः,
असारे संसारे दलयति च दर्पं विमनसाम् ।।

प्रदीप्ता झंझाग्निः प्रपचति च भूतानि ससुखम्,
सुक्षेत्राणां दीर्णम् हृदयगतशीर्षाञ्चलपटम् ।
न कोऽपीहास्ते यो, वदतु ननु स्नेहार्द्रदयितः,
इहायातो ग्रीष्मः सकलजनसन्तापनपरः ।।

---

# गर्जन्ति मेघाः खलु राज्यप्राप्तौ
## ( वर्षर्तुगीतिः )

ग्रीष्मप्रहारेण विदीर्णचेतसः,
शुष्काननाः वीक्ष्य समुद्रपत्नीः।
कारुण्यपूर्णाः सघना घनास्ते,
बाष्पाणि मुञ्चन्ति बहूनि शान्त्यै ।।

वज्रप्रपातैर्ननु नीरदानाम् ,
ग्रीष्मः परास्तो भजते न पार्श्वम् ।
मेघाः समारुह्य तु वाहनेषु ,
राज्याभिषेकाय इतः प्रयान्ति ।।

विद्युत्पताकैरनुनीयमानाः,
भेरीस्वनं गर्जनया स्वनन्तः।
संभूय घोषं विजयोत्सवस्य,
गर्जन्ति मेघाः खलु राज्यप्राप्तौ ।।

मेघाधिपस्य नवलोकतंत्रम् ,
निरीक्ष्य यात्रा स्थगिता नृपाणाम् ।
तंत्रस्य वृद्ध्यै सहयोगिनस्ते,
प्रासादमध्ये विरमन्ति भूपाः।।

भूयोऽपि श्यामा गगने पयोदाः,
गर्जन्ति वर्षन्ति पयांस्यजस्रम् ।
आकर्ण्य दूराद्घनगर्जितानि,
नृत्यन्ति मत्ता विपिने मयूराः।।

सूर्योऽपि शौर्यं परिहाय स्वीयम् ,
क्षीणप्रभो भीत इवास्ति ध्वानैः।
दूरं नृपं वीक्ष्य नवोदितञ्च ,
क्षिप्रं पलाय्याऽऽविशतेऽन्तरिक्षम् ।।

प्राप्तस्वराज्याः कृषिपालकास्ते,
गायन्ति हृष्टाः कृषकाः सरामाः।
शालिध्वजास्ताः शिरसा वहन्तः,
धान्यप्ररोपाय कृतप्रयाणाः ।।

आनीय वारीणि परिश्रमेण,
लोकोपकाराय समुद्यतोऽसि।
आषाढ़मासे नवमेघराज्यम् ,
पाथोद विस्तारय भूरि भूयः ।।

स्वातन्त्र्यमादाय सरांसि वाप्यः,
नद्यस्तडागाः प्रवहन्ति स्वैरम् ।
मोमुद्यमानान् सकलान् स्वतंत्रे,
देशेऽस्मदीये सुखयन्ति लोकान् ।।

# नहि विघ्नभयं व्रतिनाम् सुधियाम्
## ( वर्षर्तौ गुरुशिष्ययोरालापः )

गुरु : वद, वत्सल छात्र सुशील त्वया,
क्रियते पठनं कठिनं सुघने ।
चलिते पवने क्व गतः, स घनः,
स घनोऽपि पुनश्चलितुं न क्षमः ।।

छात्र : ननु नृत्यति मेघसमागमने ,
हरिते तृणघासमये सुवने ।
कुरुते तु मयूरगणो गरिमाः,
श्रवणीयवचोभिरसौ सुमनः ।।
कृषकस्य कृते तु महासमयः,
भुवि भारतवर्षहिताय जनः।
विदधाति हलेन क्षितेः कृषकः,
कृषिकर्मसहायक एष सदा ।।
पठनस्य कृते तु अयं समयः
बहुविघ्नमयः प्रतिभाति मतौ ।
बहुकर्दमिलश्च जलैर्भरितः,
गुरुदेव दयस्व नु देहि मतिम् ।।

गुरु :　प्रिय छात्र ! शृणोतु भवान् मतिमान्,

नहि विघ्नभयं व्रतिनाम् सुधियाम् ।

तरुणोऽपि जनोऽध्ययने तु रतः,

क्व स बालकृते सति क्रीडनके ।।

छात्र :　सुविनोदकरोद्यमशालिनिके,

बहुशालियुते　बहुलालियुते ।

ललनाभिरिहोत्सवकारिणि हा,

कथमद्य ऋतौ च पठाम गुरो ।।

---

# एकाकिनी यात्यभिसारिकेव
## ( शरदृतुगीतिः )

आयाति मन्दं गगने हि चन्द्रः,
तनोति ज्योत्स्नामपहाय तामसम् ।
लोकस्य दुःखानि विलोपयन् सः,
विराजते राजतपर्वतस्थः ।।

नक्षत्रताराग्रहसंकुलः सदा,
सम्राट् शशांको दधदभ्रछत्रम् ।
आसाद्य राज्यं शरदम्बरस्य,
विभाति ज्योतिर्मयशारदेन्दुः ।।

प्रवृत्तसंगीतमयं सुनृत्यम्,
वन्यप्रदेशे च मयूरकेकाः ।
आकर्ण्य विरही व्यथतेऽनुरागी,
कान्ताभिलाषी मदनाभिविष्टः ।।

प्रियान् समासाद्य गृहेषु रामाः,
समालपन्त्यः ससुखं स्वपन्ति ।
प्रियैर्वियुक्ताः कलहैः सखेदाः,
निरीक्ष्य चन्द्रं क्षपयन्ति नक्तम् ।।

रात्रिः शशांकोदयशुभ्रवासा,
तारागणोन्मीलितचारुनेत्रा ।
ज्योत्स्नाम्बरा प्राणप्रियं सुकान्ता,
एकाकिनी यात्यभिसारिकेव ।।

## भज गाङ्गपदम् अमलम् विमलम्

हिमशैलसुता विमला चपला,
वद कस्य न मोदकरी तरला,
गतिरेव सुजीवनमस्ति सखे,
नदतीति सुभाषितमिन्दुमुखी
अनया कुरु स्वात्ममनः सबलम्
भज गाङ्गपदम् अमलम् विमलम् ।।

भवभूतिभगीरथतोषकरी,
लहरीभिरभीष्टकृते त्वरितम्,
अनुयाति पुनाति तनोति मुदम्
सुधया ललिते पविते हृदये
भज गाङ्गपदं विमलम् अमलम् ।।

हृदि द्वेषमलीमसभावमये,
अपहृत्य तमो तनुते सुमतिम्
सहभावसुमानवताप्रसरैः
वसुधां परिवारमिवातनुते
अनया कुरु स्वात्ममनः सबलम्
भज गाङ्गपदम् अमलम् विमलम् ।।

जलराशिगुणैः श्रमशक्तिकणैः,
कृषिक्षेत्रहृदं सुहृदं सफलम्
विदधाति तमूर्जितमुद्यमिनम्
फलदा ननु कल्पलता मधुरा
अनया कुरु स्वात्ममनो मधुरम्
भज गाङ्गपदम् अमलम् विमलम् ।।

भवनाथकृपामुपलभ्य जनान् ,
प्रकरोति सदा शिवशान्तिश्रितान्
हरतीति शुचं कलुषं यदि सा
नहि युक्तमियं क्रियते समला
सुधया ललिते पविते हृदये,
भज गाङ्गपदम् विमलम् अमलम् ।।

---

# भाग्यशाली सदा मोदते-मोदते
## ( काव्यालिगीतिः )

नैव वित्तं न विद्या न रूपं बलम् ,
पौरुषं नैव शीलं कुलमेधते।
राजते केवलं भाग्यमेकं ध्रुवम् ,
भाग्यशाली सदा मोदते-मोदते ।।

भाग्यमेवाश्रयन्ते जनाः कातराः,
जित्वरः कर्मयोगी सदा मानवः।
उद्यमेनैव सिध्यंति कार्याणि वै,
कर्मशीलः सदा मोदते-मोदते ।।

भाग्यवन्तः सुराः स्वर्गदुर्गे स्थिताः,
सैन्यनेता हि तेषां गुरूरक्षकः।
सन्ति ते सौख्यवन्तोऽनिशं वज्रिणः,
भाग्यशाली सदा मोदते-मोदते ।।

उद्यमेनैव शूराः लभन्ते जयम् ,
नाभिलाषैः मृगं विन्दते केसरी।
भारतीयाः श्रमेणैव मुक्तिं श्रिताः,
कर्मशीलः सदा मोदते-मोदते ।।

दैवयोगेन शेते समुद्रे हरिः,
बुद्धिमन्तो मनुष्याः कृता निर्धनाः।
भाग्यहीनेष्वपार्थं गुणं वा बलम् ,
भाग्यशाली सदा मोदते-मोदते ।।

नैव भाग्यानि लोके बिना पौरुषम्,
नैव सिध्यन्ति सिध्यन्ति सिध्यन्ति नो।
उद्यमी जायते भाग्यशाली स्वयम्,
भाग्यशाली सुकर्मी सदा मोदते ।।

---

# अमृतं प्रोच्य हालाहलं दीयते

केन धारा नदीनां मलिनाः कृताः,
पूतगंगाजलं केन गरलीकृतम् ।
निर्गताः प्रेममाधुर्यसद्भावनाः,
द्वेषहालाहलैः मानसं हा भृतम् ।।

वैरभावेन जीवन्नरो दृश्यते,
मानवेनैव त्रस्तः स्वयं मानवः।
गेहदीपेन दग्धं स्वकीयं गृहम् ,
केन प्रज्वालितो भीतिदो दीपकः।।

रक्षणे ये सशक्ताः समर्था नराः,
पीड्यते तैरियं मेदिनी भूयशः।
दानवानां भयातंकशंकाकुले,
मानवानां कृते कुत्र शरणस्थलम्?

प्रीतिरागं परित्यज्य वासन्तिकम् ,
रक्तपातोत्सवो मन्यतेऽहर्निशम् ।
ज्योतिदीपस्तु निर्वापयत्यञ्चलम् ,
त्रोटितं केन विश्वाससूत्रं प्रभो ?

अमृतं प्रोच्य हालाहलं दीयते,
जातिधर्माभिधानेन कटुतार्पणम् ।
क्षीयते ऐक्यभावश्च सद्भावना,
कुत्र लभ्येत शान्तिः सुखं बन्धुता?

सर्वतः श्रूयते हा कथं रोदनम् ,
आगतेयं कुतो वन्यता मानवे।
कामये काऽपि रचना भवेदीदृशी,
यत्र मनुता भवेन्मानवो मानवः।।

कामये कोऽपि स्यात्तादृशो वै ऋतुः,
यत्र सुखदाः समीराश्चलेयुः शुभाः।
कामये काऽपि कविता भवेदीदृशी,
या समेषां कृते स्यादानन्ददा ।।

# वृथा स्वतन्त्रतां विना

धनानि जीवितं वपुः सुकान्तमाननं तथा,
मनोरमा शशिप्रभा प्रियाऽपि खेदहारिणी ।
प्रभूतशक्तिसाधनं प्रभुत्व-कीर्ति-यौवनम् ,
विना स्वतंत्रतामिमा वृथा समस्तसम्पदः।।

दिवानिशं विशालभूः विभज्यते हि खण्डशः,
विवर्धते कुटुम्बिनां तु वैमनस्यमक्षयम् ।
मनांसि भीतिपूरितान्यहो स्वतंत्रभारते,
विलीयते हि बन्धुता कथं तदा स्वतन्त्रता ।।

दिवाकरोऽपि चन्द्रमा रतौ जगद्धिताय वै,
निधाय मानसे शिवं शुभं विधातुमुद्यतौ।
तथा शरीरिणां कृते जनैः परोपकारिता,
न काम्यते निजेच्छया कथं तदा स्वतन्त्रता ।।

अनारतं हि पौरुषं विलुप्यते सुकर्मिणाम् ,
जना निजार्थसाधने रताः प्रमत्तताकुलाः।
अनीतिमार्गमाश्रितः सुतः पितुर्विरोधने,
सुखं सतां न संगतौ कथं तदा स्वतन्त्रता!

समानचेतसां हि नः समत्वभावमास्तृतम् ,
समानमस्ति वो मनः स्वमातृभूमिवन्दने।
सदैकता च विद्यते शुभासु कल्पनासु नः,
विभक्तुमुद्यता परे कथं तदा स्वतन्त्रता ?

# अहम् ब्रह्माऽस्मि

‘अहम् ब्रह्माऽस्मि’ इत्येतत् सूत्रवाक्यात् प्रणोदितः।
तस्मादपत्यरचनायामग्रणीरभवम् मुदा ।।
सर्वश्रेष्ठं धनम्मन्ये बाहुल्यं सन्ततेरहम् ।
विशालानां हि स्वप्नानाम् आलये जालमास्तृतम् ।।
‘वरमेकोगुणी पुत्रो’ इति मिथ्याप्रकल्पनम् ।
मदीये नीतिशास्त्रे तु वरं पुत्रशतान्यपि ।।
दैवाधीनं जगत् सर्वं ममाधीनं त्वपत्यता ।
त्यक्त्वा संयमनं लोके शक्तिमाञ्जायते नरः ।।
लघ्वागारम् अपर्याप्तं, शयनीयं च वेश्मनि ।
तत्राप्यैक्यभावेन एकादश व्यवस्थिताः ।।
सप्त कन्याः सुतौ द्वौ मे गृहे सन्ति नवग्रहाः।
तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम् ।।
पौष्टिकं भोजनं चैव पयो नवनीतमेव च ।
आदातुं तेऽपि वाञ्छन्ति यदा पश्यन्ति वेश्मिनः ।।
काऽपि कामयते चीरीं, कोऽपि कञ्चुकमीहते ।
गृहिणी कौशिकीं शाटीं समे वाञ्छन्त्युपानहम् ।।
पुस्तिकाकप्पिकाभावे मिथोऽन्यस्य हरन्ति ते ।
विवदन्ति मिथः सर्वे चोष्याय बहुधा गृहे ।।
शालां निश्चितपरिधानाद् विना गन्तुं नोद्यतः।
सुतो हि विनयो ज्येष्ठः, कनिष्ठस्तु बहिष्कृतः ।।

नैव पूरयितुं शक्यः सर्वेषामीप्सितं यदा ।
मनो मे खिद्यते भूरि सर्वानालोक्य दुःखितान् ।।
हा धिक् तस्मिन्कालेऽहम् असूयामि पुनः पुनः ।
उत्पद्यन्ते विलीयन्ते दरिद्राणां मनोरथाः।।
चिन्तयंश्च शोचामि किं भविष्यत्यायतौ।
अभावे च महर्घे च कथं यास्यति जीवनम् ।।
दुहितॄणां विवाहाय के दास्यन्ति सुतान्निजान् ।
रात्रिजागरपरः प्रातः सप्तकन्याः स्मराम्यहम् ।।
मदीयः आलयो जातः पीडाकंटकसंकुलः ।
अमा कृष्णनिशा तत्र सर्वतः परिदृश्यते ।।
भासन्ते नैव खद्योता ये केऽप्युपपालिताः ।
लध्वालये तु शोभेते केवलं कुलदीपकौ ।।

# कुलिशायिताः सर्वे कथम्
## ( गजलगीतिः )

ये कदाचित् सुप्रसूनैरावृता आसन् द्रुमाः।
ते सुजन्मानस्तु जाता अद्य कण्टकिताः कथम् ?

हालाहलं कर्त्तुं सुधां ये साधनानिरता जनाः।
सन्ति ते स्वयमेव दिग्धा अद्य गरलैः हा कथम् ?

सर्वदाऽऽसन् ये प्रभाते लोकप्रीणनतत्पराः।
सन्ति तेऽस्तोन्मुखाः खलु पाण्डुवर्णा हा कथम् ?

सत्यमेतन्नाधुना ज्योतिर्विलुप्तम् भूतलात् ।
सन्ति लोका जायमानास्तामसैरन्धाः कथम् ?

सर्वदा वाञ्छा कृता कुलिशान् प्रकर्त्तुं कोमलान् ।
किन्तु चेतः खिद्यते कुलिशायिताः सर्वे कथम् ?

# रिक्ततां मे हृदः कः सखे वारयेत्
## ( गजलगीतिः )

कोऽपि लाभो व्यथाश्रावणे नास्ति भोः ,
चेतसो मे हि को दग्धतां शामयेत् ?
कालक्षेपेण किं चिन्तने सर्वदा,
रिक्ततां मे हृदः कः सखे वारयेत् ?

योऽनभिज्ञोऽस्ति नाम्नानुलेपस्य तम्,
निर्दयम् आहतः को व्रणं दर्शयेत् ।
वर्द्धते यस्य नाम्नैव पीड़ा सखे,
तस्य पार्श्वे वियोगी कथम् आव्रजेत् ?

पूर्यते नो तृषा यस्य पानेन वै,
नीरमेतादृशं को वृथा पाययेत् ?
सत्यरूपेण चेद्भिद्यते वै गृहम् ,
दर्पणं तादृशं कः कथं दर्शयेत् ?

दाहकोऽपि स्वयं दह्यते वह्निना,
कस्तदाऽन्यान् सुदग्धो वृथा पीडयेत् ?
आहतैर्भञ्जनैर्दूयते केवलम् ,
को वराकस्तदा प्रस्तरानाक्रमेत् ?

---

# देहि मे
## ( शिक्षकस्य मनोऽभिलाषः )

देहि मे बुभुक्षितम् जातकम्
देहि मे रोगिणम् बालकम्
गृहविहीनबालकम्
पथविहीनबालकम्
देहि मे स्वकीयां सन्ततिम् ।।

स्नेहलालनम् अपेक्षते मुदा,
शिक्षणाकांक्षिणम् लालनाभिलाषिणम् ।
देहि मे जातकम् , यस्य कोऽपि नास्ति भोः।

देहि मे जातकान्
शिक्षणालये शिक्षकः प्रतीक्षते
शिक्षकस्तानपेक्षतेऽपेक्षते
सहायताकृते प्रतीक्षते, प्रतीक्षते,
वयं प्रस्तुताः, तान् विधातुमुद्यताः,
शल्यकर्मिणः, विधिज्ञान् मन्त्रियन्त्रिणः
श्रेष्ठनेतृन् भाविशिक्षकान् ,
आत्मसंस्कृतेः पोषकांस्तान् ,

राष्ट्रगौरवान् वीरबालकान् ,
तानायतेः स्वप्नपूरकान्
विधातुमुद्यता, दातुमुद्यताः
शिक्षका वयम् , शिक्षका वयम् ।।

---

# भारतम् प्रबोधय

यत्र चेतांसि भयशून्यानि स्युः।
यत्र वयं गर्वेण मस्तकान् उन्नमय्य
स्थातुं क्षमाः।
यत्र ज्ञानं मुक्तं स्यात् ।
यत्राहर्निशं विशालवसुधाम्
खण्डशो विभज्य लघूनि-लघूनि
चाजिराणि निर्मितानि मा स्युः।
यत्र प्रतिवाक्यं हृदयस्य गांभीर्यान्निर्गच्छति।
यत्र प्रतिदिशं कर्मणामजस्रस्रोतांसि,
उद्गम्य निरन्तरं निर्बाधं प्रवहन्ति।
यत्र मौलिकविचाराणां सरित्
तुच्छाचाराणां मरुबालुकासु विलुप्ता न स्यात् ।
यत्र पुरुषार्थः शत-शतखण्डेषु विभक्तो न भवेत् ।
यत्र कर्माणि भावना, आनन्दानुभूतयश्च
सर्वं तवानुगतं स्यात् ।
हे प्रभो, हे जगत्पितः,
आत्मनः सशक्तकरतलाघोषैः
तस्मिन्नेव स्वातंत्र्यस्वर्गे
सुप्तममुं भारतम् प्रबोधय ।।

(कवीन्द्ररवीन्द्रस्य 'चित्त जेथाभयशून्य' इत्यस्य संस्कृतरूपान्तरम् )

# किं कृतम्, किं कृतम्

भारतस्यैकतासाधिका भारती,
देवभाषा सुललिता मधुरा प्रिया।
येन जन्माऽनया सार्थकं निर्मितं
तत् कृतम्, तत् कृतम्, तत् कृतम्, तत् कृतम् ।।

पंचभूते शरीरे जरा जायते,
यो हि जातः पुमान् तस्य मृत्युर्ध्रुवम् ।
संस्कृतं यैरधीतं क्वचित् जीवने,
तत् कृतम्, तत् कृतम्, तत् कृतम्, तत् कृतम् ।।

संस्कृतं मातृतुल्यं हि विद्याधनम् ,
संस्कृतेनैव नम्रः सुशीलो भवेत् ।
येन पीतं सुमधुरं न भाषाऽमृतम् ,
तेन हा, किं कृतम्, किं कृतम्, किं कृतम् ।।

येन कर्णौ न संयोजितौ संस्कृते,
येन जिह्वाऽपि सद्वाचि नो चालिता ।
नैव माधुर्यमास्वादितं सद्गिराम् ,
तेन हा, किं कृतम्, किं कृतम्, किं कृतम् ।।

---

# अनुरागस्य प्रासादः
## ( गजलगीतिः )

अनुरागस्य प्रासादः निर्मातुं नहि शक्यते ।
जीवनं दीयते यत्र, तत्र प्रेमालयो मतः ।।

दीप्यते हृदि मे वह्निस्तेऽनुरागस्य दीपनैः ।
एत्य धैर्याम्बुवर्षैस्त्वं द्रुतं प्रेमिन् प्रशीतय ।।

चेदहं हृदये नास्मि तेऽनुरागस्य बन्धने ।
कोऽपीतरः स्थितस्तत्र शंकया दूयते मनः ।।

भृशं नेत्रैः मया पीतः प्राण मध्वासवो मुदा ।
नास्ति तत्रासवे शक्तिरन्यथा मरणं ध्रुवम् ।।

# दुहितुः व्यथा

लोकं परितो विराजमाना
जगतः सृष्टौ दुहिताऽहम् ।
जन्मनि मे मानं न दीयते
पित्रोरप्यपमानं क्रियते
सोदरभ्रातरि महदुत्साहः
भगिनीकृते भवति व्यवधानम्
भवत्युपेक्षा परिवारेऽपि, कथय कीदृशी दुहिताऽहम्?

कुटुम्बकानां जीवनवृत्त्यै
वुभुक्षिताऽपि श्रमं करोमि,
भ्राता स्नेहैरशनं लभते
मह्यं तर्जनमेव दीयते ।
जन्म यदा जायते मदीयम्
दरिद्रतामवमन्य मां द्रुतम्
गलग्रहैः प्राणोऽपह्रियते
किं कथयानि हन्त साम्प्रतम्
"दुहितुः जन्म कदाचिन्न स्यात्"
इत्याकुलितैः गर्भस्त्रावः
जनकैः गर्भस्त्रावः क्रियते—हा धिक् पित्रोः
निर्धनताऽहम् ...

यद्यपि प्रगतिपथं गच्छन्ती
बहुशः राष्ट्रोन्नतिं नयन्ती
अन्तरिक्षमाक्रम्य सफलताम्
लभमाना समवाप्य यशांसि
भ्रातृजनानतिक्रम्य सर्वतः
विजयपताकामहं दधाना
तथापि मे मार्गावरोधकाः
किंपुरुषास्ते यशो लभन्ते
सर्वेषां निगडैराबद्धाऽस्वाधीना दुहिताऽहम् ।।

क्वचिद् विधाय सतीः जीविताः
दह्यन्ते ग्रामेषु सुकन्याः
क्वचिद् व्यथन्ते मनसस्तापैः
विक्षिप्ता ननु बह्व्यस्तनयाः
स्नेहलालने ममताकुलितैः
चेज्जनकैः शरणं दीयेत
तानपराधिजनानिव मत्वा
सामाजिकास्तिरस्कुर्वन्ति
कन्याशिक्षाया अधिकारः
यौतकदाने दण्डविधानम्
सर्वानेतान् घुणा भुंजते
तस्मादस्मि व्यथितदुहिताऽहम् ।।

प्रासादस्था धनिनो जनकाः,
निर्धनकन्या विवशा कुटजे
द्यूते मदपाने संलग्नः
पुत्रः पितुर्धनं बहु व्ययते।
तथापि जनकस्तं लालयते
सुतमीदृशी दुहिताऽहम् ।।

दुहितुः सम्मानस्योपेक्षा,
बलात्कारिणां भवति सुरक्षा।
भवत्यर्चनं नित्यं भक्त्या
भारतभुवि प्रस्तरदेवीनाम्
किन्तु भवति शोषणं सुतानाम्
यस्या भारतमातुः क्रोडे
जन्म गृहीतं मया तत्र तु
कन्या नशितुम् बाध्यन्ते
हा धिक् स्त्रष्टुर्दुहिताऽहम् ।।

जगतोऽत्याचारं सोढ्वा,
रूपञ्चेद् दुर्गाकालीनाम्
अहं ग्रहीष्ये दुष्टजनेभ्यः,
शापान्मुक्तः कोऽपि न भविता,
तमसाऽवृतं जगन्नंक्ष्यति, मे
करुणाक्रन्दैर्व्यथिताऽहम् ।।

जनन्यहं जाने तव दुःखम्  ,
खे, पाताले व्याप्तुं नार्हति
तथापि ममतामूर्त्तिर्माता
इत्यनुरुन्धे प्रणतिपूर्वकम्
जगति, जनन्यभिलषामि जननम् ,
कृपया मे जननं मा रुन्ध्याः,
माभूत् कोऽपि गर्भस्त्रावः
मनसि निगूढमद्भुतस्वप्नम्
चिरसंचितमभिलाषं पूरय,
सेविष्ये पुत्रादप्यधिकम्
परिणयकृते न यौतकचिन्ता
मनसि कदाचित् पितुर्भविष्यति
शिक्षां दीक्षां प्राप्य सुशक्तिम्
विधास्यामि सुखिनं परिवारम्
मम जन्मना जन्मभूर्भास्यति,
कृपया मे जननं मा रुन्ध्याः
भूयोभूयो गर्भस्त्रावैर्मृताऽभिशप्ता दुहिताऽहम् ।।

---

# रौति मे स्वतंत्रता

भारतस्यैकतासाधिका स्वतन्त्रता,
हा कथम् विलप्य, "अद्य रौति मे स्वतंत्रता"?
"रक्ष मां प्रभो" रौति मे स्वतन्त्रता।

जनाधिपैः जनेषु भेदभावना वितन्यते,
राष्ट्रविक्रयं विधाय प्रत्यहं भुञ्जते।
अट्टका विनिर्मिताः पदं महत् सुरक्षितम्
नेतृणां दूषणोऽप्यद्य सद्गुणायते।।
रक्तपातहिंसयाऽहिंसकस्य हिंसनम् ,
तमिस्रया विधीयते ज्योतिनिर्वापणम् ।
जाति-वर्ग-धर्मभेदबुद्धिना हि वञ्चिता ।।
हा कथम् रौति मे स्वतन्त्रता ।।

मारणं विधीयते, सुपारिकां प्रदाय वै,
तारणं सुनिश्चितं चेद्धनानि करतले।
भुजाग्रशायिविषधरो दिवानिशं च पुष्यते,
क्षुधातृषाकुला रता, अश्रुबिन्दुपातने,
हा कथम् राष्ट्रमद्य, कुव्यवस्थावृतः।
परस्परस्य सौहृदः वचोऽपि नैव श्रूयते।

प्रीति-त्याग-स्नेहिनाम् भावना तिरस्कृता।
'रक्ष मां प्रभो' रौति मे स्वतन्त्रता।
हा कथम् विलप्य "अद्य रौति मे स्वतंत्रता"।।

# किं स्वातन्त्र्यमतः परम्

स्वतंत्रे भारते सर्वः बहु स्वातंत्र्यमपेक्षते ।
भेकाः सर्पानाक्रमन्ते किं स्वातन्त्र्यमतः परम् ।।

दिवसे सायं च मध्याह्ने लुण्टाका यत्र कुत्रचित्।
धनान्याहृत्य निर्भीका भ्रमन्ति हि सुरक्षिता; ।।

अनेके घातकाः स्वैरं कृत्वा हत्या मुहुर्मुहुः।
दण्डिता नैव जायन्ते किं स्वातन्त्र्यमतः परम् ।।

अहन्यहनि नेतार उत्कोचार्जनतत्पराः।
प्रजानां धनसम्पद्भिर्जाताः श्यामधनाधिपाः ।।

देशं विक्रीय भुञ्जाना नेतारो हर्म्यस्वामिनः।
दुःख्यन्ते दलिता, दीना उटजैरपि वञ्चिताः।।

आत्मने पदमारक्ष्य जनतानां कार्यसाधने।
याचन्ते करतले वित्तं, किं स्वातन्त्र्यमतः परम् ।।

पेयालयेषु तिष्ठन्तो भुक्त्वा पीत्वा च स्वेच्छया।
"घोटालासु" रमन्तस्ते मोदन्ते जननायकाः।

श्रद्धया स्तौति यो भक्तो नायकान् निर्वाचने ।
वित्तेन कुरुते भक्तिं स सर्वत्र महीयते ।।

विद्वान् गुणी कलाविज्ञः सुजनः सीदति जीवने।
नेता तोल्यते रजतैः किं स्वातन्त्र्यमतः परम् ।।

ईर्ष्याद्वेषनिमग्नेऽत्र हा किं किं न विधीयते।
सुपारीमाध्यमेनापि हन्यन्ते मानवाः क्वचित् ।।

रक्तपातेन, हिंसाया जायते नग्ननर्तनम् ।
अहिंसकाय राष्ट्राय किं स्वातन्त्र्यमतः परम् ।।

विषाक्तनग्नचित्राणि घातकानि सुदर्शने ।
प्रदर्श्यन्ते दिवारात्रं तिरस्कृत्य स्वसंस्कृतिम् ।।

दर्शनेनैव तद्दृश्यं सकलं दूषणायते।
बाला युवत्यो नृत्यन्ति किं स्वातन्त्र्यमतः परम्।।

सूक्ष्मवासांस्यर्धाङ्गे परिधाय भ्रमन्ति ताः।
सुरूपं विकृतं कृत्वाऽऽह्वयन्ति यथा जनान् ।।
अंगस्यांगैः यथा स्पर्धा किं स्वातंत्र्यमतः परम् ।।

सुसत्ताधारिणः सुप्ताः प्रबुद्धा नु वार्ताहराः।
नवीनं वृत्तमन्विष्य प्रकाशन्ते दिने-दिने।।

कार्यालयकर्मिणां कर्म सचित्रं दूरदर्शने।
प्रदर्श्यते शासनाय किं स्वातन्त्र्यमतः परम् ।।

पूर्वस्मिन् काले भवने एकस्तत्र पितामहः।
माता पितामही सर्वाः सन्ततेर्लालने पराः।।

अद्यत्वे सदनं शून्यं स्नेहसौविध्यवर्जितम् ।
वधूः श्वश्र्वा विवदमाना किं स्वातन्त्र्यमतः परम्।।

कन्या वाऽपि सुतश्चापि प्रसादस्य सुलक्षणम्।
कुटुम्बे सन्ततेर्जन्म गोत्राय मन्यते शुभम् ।।

किन्त्वद्य न जाने हा दुहितुर्जन्मशंकया ।
विधीयते गर्भस्रावः किं स्वातन्त्र्यमतः परम् ।।

सीमासु रुधिरस्रावैः प्राणोत्सर्गैश्च प्रापिता।
स्वतन्त्रता हि सैन्यानां शौर्यगाथा प्रकथ्यते।।

नमस्कुर्मो वयं सर्वान् श्रद्धया बलिदानिनः।
त्यागस्नेहस्य प्रीतेश्च सद्भावाः सन्तु भारते।।

# विविधमुक्तकानि

जनैरवलोकितं सर्वैराननं मे स्मितैर्भृतम् ।
व्यथा या विद्यते चित्ते को हि तां द्रक्ष्यति सखे ।।

यदाश्रूणि नेत्रेषु सहसोद्भवन्ति मे ।
तदा प्रतिभाति हृदये मे, पीडाया महोत्सवः ।।

अहं पीडाप्रियो मित्र, सदा पीडाश्रितोऽभूवम् ।
विद्यते हृदये जगतां सकला वेदना सखे ।।

यमेव मन्ये आत्मीयं स एव जायतेऽपरः ।
कुसुमावलीषु शूलानि दुःखयन्ति मुहुर्मुहुः ।।

नाद्यत्वे भुजङ्गोऽपि कृष्णवर्णो विलोक्यते ।
साम्प्रतं दंशकानां त्वाकृतयो मनोहराः ।।

चीत्करोमि व्यथाग्रस्तः माऽवेहि बाधकोऽस्म्यहम् ।
स्थितेः परिवर्तनं भूयादित्येव प्रयते न्वहम् ।।

अट्टालिकानां हि महतीनां स्थितिं किं कथयानि वै।
सर्वं खलु विद्यते तत्र वायुर्नैव प्रवाति हि ।।

घर्मातपेषु तप्यन्ते ग्रीष्मर्तौ सूर्यरश्मिभिः ।
द्रुमास्ते एव छायाभिः पथिकान् शीतयन्ति वै ।।

# कवि परिचय



**नोदनाथ मिश्र 'यशस्वी'**

पिता :- स्व. कुन्दनाथ मिश्र

जन्म :- 1 सितम्बर, 1944 ई.

ग्राम :- लालगंज, पो. सरिसव, जिला– मधुबनी (बिहार), पिन- 847424
सम्पर्क– मोबाइल 9899110375

शैक्षिक योग्यता:- शास्त्री, एम. ए. (संस्कृत और हिन्दी)
एल.टी., एम.एड., पीएच. डी.

विशिष्ट अध्ययन :- काव्यशास्त्र

अनुभव :- 37 वर्ष

शैक्षिक :- अल्मोड़ा, कानपुर, शिलांग, दानापुर कैंट, वाराणसी आदि स्थानों में भाषा शिक्षण।

प्रशासनिक :- (क) नामरूप (असम) छिवकी, बमरौली (इलाहाबाद), मनमाड, रजोकरी (नई दिल्ली) में प्राचार्य केन्द्रीय विद्यालय।
(ख) उप नियंत्रक (परीक्षा) राष्ट्रिय संस्कृत संस्थान, नई दिल्ली।
(ग) उप शिक्षा सलाहकार (संस्कृत) मानव संसाधन विकास मन्त्रालय, शिक्षा विभाग, भारत सरकार, नई दिल्ली।

**समानंतर शैक्षिक अनुभव**

1. केन्द्रीय शिक्षा बोर्ड, नई दिल्ली से संस्कृत- हिन्दी विशेषज्ञ के रूप में 20 वर्षों से सम्बद्ध।
2. दिल्ली तथा देश के अन्य भागों में संस्कृत/हिन्दी शिक्षकों के लिए कार्यशालाओं का संचालन।
3. एन.सी.ई.आर.टी., सी.बी.एस.ई., एन.आई.ओ.एस., दिल्ली संस्कृत अकादमी से संस्कृत पाठ्यपुस्तकों के लेखन से संबद्ध।

**प्रकाशन :-**
1. बाल्मीकि और कालिदास की काव्यकला
2. नवमालती (संस्कृत नाटिका संग्रह)
3. शिक्षा सूक्ति मुक्तावली (हिन्दी अंग्रेजी अनुवाद सहित)
4. कवितावीथिः
5. हिन्दी, संस्कृत पत्र-पत्रिकाओं में अनेक आलेख, कविता, कहानी, एकांकी।

**संपादन :-**
1. शिक्षा मंजूबा (हिन्दी अंग्रेजी अनुवाद सहित) नीता प्रकाशन, नई दिल्ली
2. मैथिली में दो सौ से अधिक सांस्कृतिक/धार्मिक कथाएं 'यशस्वी' उपनाम से 'मिथिला मिहिर' साप्ताहिक में प्रकाशित।
3. Dharmashastra (with Hindi English Translation Published by Sacred Books Inc. Indiana, USA)

**अन्य :-**
1. आकाशवाणी के पटना, लखनऊ, वाराणसी, दरभंगा केन्द्रों से लगभग 20 संस्कृत नाटिकाओं का प्रसारण।
2. आधुनिक काव्यालिशैली में संस्कृत गीतों का संस्कृतभाषाशिक्षण में नवचार के रूप में प्रयोग।
3. अनेक कवि सम्मेलनों में सहभागिता
4. अनेक संस्थाओं द्वारा विशिष्ट शिक्षाविद् के रूप में सम्मानित।
5. सम्प्रति फलित ज्योतिष का विशेष अध्ययन, अनुसंधान।